न चेदेवं, लघुरूपसमनियतानां गुरूणामव्याप्यतापत्तिः, गुणादिगुणकर्मान्यत्वविशिष्टसत्तादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्ठायाः प्रतियोगिताया लाघवेन द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनैवाऽवच्छेदात् । तत्तदवच्छेदकत्वव्यक्तीनां च प्रातिस्विकरूपेणाऽभावानां युगसहस्रेणाऽपि ज्ञातुमशक्यत्वात् ।

---

माण्यापत्तेः । एवं गुरुधर्मस्याऽनवच्छेदकतया तादृशधर्मावच्छिन्नाविशिष्टबुद्धिं प्रति तादृशधर्माश्रयप्रतियोगिकाभावकूटवत्तानिश्चयत्वेनैवाऽनन्यगत्या विरोधित्वकल्पनात् कंबुग्रीवादिमान्नास्तीतिप्रतीतिदशायां कंबुग्रीवादिमदस्तीति ज्ञानविरोधोऽपि घटते इति प्राचीनमतनिर्भरः, अतो गुरुधर्मस्याऽनवच्छेदकत्वे व्याप्तेरपि दुर्वचत्वमित्याह नचेदेवमिति । लघ्विति । द्रव्यं गुणाद् विशिष्टसत्त्वाद्वा इत्यादौ द्रव्यत्वसमनियतानां गुणवत्त्वविशिष्टसत्तादीनामित्यर्थः । अव्याप्तिमुपपादयति गुणादीति । ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वव्यक्तीनां तत्तद्व्यक्तित्वेनाऽभावकूटवत्त्वमेव साध्यतावच्छेदकांशे निवेश्यमतो नोक्तदोषोऽत आह तत्तदिति । यद्यपि गुरोरवच्छेदकत्वपक्षेऽपि स्वस्वप्रतियोगिव्यधिकरणाभावघटितव्याप्तेस्तत्तत्प्रतियोगितागर्भत्वेन दुर्ज्ञेयत्वम् । तथापि व्याप्यवृत्तिसाध्यकस्थलीयव्याप्तेरभिप्रायेणेदम्, तत्र प्रतियोगिवैयधिकरण्याप्रवेशात् । निरवच्छिन्नहेत्वधिकरणवृत्तिकाभावप्रतियोगिताऽनवच्छेदकत्वमेव सर्वत्र व्याप्तौ प्रविष्टमित्याशयेनेदमिति तु परमार्थः । तेनाऽव्याप्यवृत्तिसाध्यकस्थलेऽपि व्याप्तेर्न दुर्ज्ञेयत्वमिति ध्येयम् ।

---

त्वमुपेत्योक्तरीत्या एकघटवति तादृशशब्दस्याऽप्रमाणत्वोपपादेन घटसामान्यशून्येऽपि प्रमाणव्यवहारो न स्यादिति, तथाच गुरोरवच्छेदकत्वमुपेत्य कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नप्रतियोगिताकाभाव एव तादृशशब्दजन्यशाब्दबोधविषयो वाच्यः, एकघटवति तादृशाभावाऽसत्त्वान्न तादृशशब्दः प्रमाणम्, घटसामान्यशून्ये च तादृशाभावसत्त्वात्तादृशशब्दः प्रमाणमिति भाव इति प्राहुः । नचेदेवं-यदि गुरुधर्मस्य न प्रतियोगितावच्छेदकत्वम् ।

**लघुरूपसमनियतानामिति** । विशेषणानवच्छिन्नद्रव्यत्वसमनियतानामित्यर्थः । **लाघवेनेति** । गुणत्वावच्छिन्नप्रकारेण हेतुमन्निवेशापेक्षया निर्विशेषणकद्रव्यत्वादिपुरस्कारेण तन्निवेशे लाघवेनेत्यर्थः । **तत्तद्व्यक्तित्वेनाऽभावकूटवत्त्वमेवेति** । तथाच हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वानां तादृशावच्छेदकत्वत्वेनाऽभावो न निवेश्य इत्यर्थः । **ज्ञातुमशक्यत्वादिति** । अनन्तानां तादृशावच्छेदकत्वात्मकप्रतियोगिनां प्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वेन ज्ञानाऽसम्भवादिति भावः । निर्विशेषणकद्रव्यत्वघटितप्रतियोगितावच्छेदकतात्वापेक्षया द्रव्यत्वत्वघटितत्वतादृशावच्छेदकतात्वस्य गौरवेणाऽनवच्छेदकत्वनिबन्ध-

एवं द्रव्यत्वत्वादिविशिष्टद्रव्यत्वादेरव्याप्यत्वप्रसङ्गोऽप्यनुसन्धेयः, उपदर्शितप्रकाराणामपि स्वत्वादिघटितत्वेन दुर्ज्ञेयत्वात्। अत एव घ्राणग्राह्यगुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधु सङ्गच्छते इत्यपि केचिदिति कृतं पल्लवितेन।

इत्यवच्छेदकत्वनिरुक्तिदीधितिः।

---

द्रव्यत्वत्वेति। द्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वापेक्षया द्रव्यत्वत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य गुरुतया तदवच्छिन्नाऽभावाप्रसिद्धेरिति भावः। ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकभिन्नं स्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितानवच्छेदकीभूततादृशधर्मभिन्नं वा यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र हेतुमन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयतादृशप्रतियोगितानवच्छेदकावच्छेद्यत्वं नास्ति साधने तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र वा दुर्ज्ञेयत्वाभावात्तथैव व्याप्तिर्वाच्येत्यत आह उपदर्शितेति। स्वत्वादीति। आदिना व्यापकतापर्यवसन्नस्य तत्तदवच्छेदकत्वाभावगर्भसामान्यत्वस्योपग्रहः। अतएव—गुरोरवच्छेदकत्वादेव। सङ्गच्छत इति। अन्यथा ग्राह्यगन्धत्वापेक्षया गुरुत्वेन घ्राणग्राह्यगुणत्वावच्छिन्नाभावाऽप्रसिद्ध्या तद्वृत्तित्वरूपं व्यभिचरितत्वं तत्र न स्यादिति भावः। यद्यपि साध्यव्यापकतावच्छेदकधर्मावच्छिन्नाभाववद्वृत्तित्वमेव व्यभिचारः, स च ग्राह्यगन्धत्वावच्छिन्नाभाववद्वृत्तित्वेनैव तत्र सुलभ इत्यपि शक्यते वक्तुम्, तथापि तद्बुद्धेः प्रकृतसाध्यकानुमित्यविरोधितया हेत्वाभासता न स्यात्। यद्विषयकत्वेन यादृशानुमानविरोधित्वं तस्यैव तत्र तथात्वादिति भावः॥

इति श्री जगदीशभट्टाचार्य्यविरचितमवच्छेदकत्वनिरुक्तिप्रकरणं सम्पूर्णम्।

---

नामनुपपत्तिमप्याह दीधितौ एवमिति। रीत्येति शेषः। अव्याप्यत्वप्रसङ्गोऽप्यनुसन्धेय इति। अतो गुरोरवच्छेदकत्वमावश्यकमेवेति शेषः।

इति श्रीमहामहोपाध्याय श्रीप्रभुदत्तशास्त्रिसुत श्रीशिवदत्तमिश्रविरचिता जागदीश्यवच्छेदकत्वनिरुक्तिप्रकरणव्याख्या समाप्ता।

---

रोधितया हेत्वाभासता न स्यात् । यद्विषयकत्वेन यादृशानुमानविरोधित्वं तस्यैव तत्र तथात्वादिति भावः ॥

इति श्री जगदीशभट्टाचार्य्यविरचितमवच्छेदकत्वनिरुक्तिप्रकरणं सम्पूर्णम् ।

---

नामनुपपत्तिमप्याह दीधितौ एवमिति । रीत्येति शेषः । अन्याप्यत्वप्रसङ्गोऽप्य- नुसन्धेय इति । अतो गुरोरवच्छेदकत्वमावश्यकमेवेति शेषः ।

इति श्रीमहामहोपाध्याय श्रीप्रभुदत्तशास्त्रिसुत श्रीशिवदत्तमिश्रविरचिता जागदीश्यवच्छेदकत्वनिरुक्तिप्रकरणव्याख्या समाप्ता ।

---

१ मुक्तावली । न्यायव्याकरणाचार्य पं० श्रीसूर्यनारायणशुक्लरचित मयूख टीका सहित । आज तक मुक्तावली पर जितनी टीका टिप्पणी छपी हैं उन सबसे उत्तम यह नवीन ढङ्गकी सरलटीका विद्यार्थियोंके अत्यन्त उपयोग की हुई है ।

संपूर्ण ग्रन्थ का मूल्य १।)

प्रत्यक्षखण्डान्तः प्रथमोभागः ॥=)अनुमानशब्दखण्डाद्यात्मक द्वितीयोभागः ॥=)

२ माथुरीपञ्चलक्षणी सिंहव्याघ्रलक्षण सहिता । बनारस गवर्नमेंट संस्कृत कालेज के अध्यापक न्यायाचार्य पं० श्रीशिवदत्तमिश्रकृत गंगानिर्झरिणी व्याख्या टिप्पणी सहित । इस टीका टिप्पणी के लिए अधिक न लिखकर इतना लिखना पर्याप्त होगा कि विद्यार्थियों के उपयोगी ऐसी सरल तथा विस्तृत टीका आज तक कहीं भी प्रकाशित नहीं हुई है । मूल्य लागत मात्र ।॥)

३ माथुरीपञ्चलक्षणी सिंहव्याघ्रलक्षण सहित । पं० श्री उमानाथार्य्यालकृत व्याख्या टिप्पणी सहित । बनारस हिन्दु युनिवर्सिटी के अध्यापक श्री हरिहरशास्त्री सङ्कलित माथुरी पञ्चलक्षणी क्रोड़पत्र सहित । इस टीकामें विशेषता यह है कि इसमें सभी आवश्यक विषयों पर संक्षिप्त में व्याख्या हुई है । मूल्य लागत मात्र ।=)

४ जागदीशीपञ्चलक्षणी सिंहव्याघ्रलक्षणसहिता । बनारस गवर्नमेंट संस्कृत कालेजके अध्यापक न्यायाचार्य पं० श्री शिवदत्तमिश्रकृत गंगानिर्झरिणी व्याख्या टिप्पणी सहित इसकी टीका भी माथुरीपञ्चलक्षणी गंगानिर्झरिणी व्याख्याके सदृश परीक्षोपयोगि सरल तथा विस्तृत हुई है। ऐसी उत्तम टीका का मूल्य लागत मात्र ॥)

५ सांख्यतत्त्वकौमुदी । पण्डितराज श्रीराजेश्वरशास्त्रीकृत टिप्पणी सहित । मूल्य ॥।)

६ सांख्यतत्त्वकौमुदी । परीक्षोपयोगी वंशीधरी टीकासहित । विद्यार्थियों के लाभ के लिए मूल्य पूर्व से घटाकर अत्यन्त अल्प रखा है । मूल्य लागतमात्र २॥)

७ योगसूत्रम् । मणिप्रभा, भोजवृत्तिः, योगचन्द्रिका, भावागणेशवृत्तिः, नागे[illegible] भट्टवृत्तिः, योगसुधाकर आदि ६ टीका तथा टिप्पणी सहित । ऐसी [illegible] टीका सहित योगसूत्र की दुसरी पुस्तक आज तक नहीं छपी थी [illegible] अलग २ खरीदने से ५) ६) को मिलती थी मगर अब यह [illegible] पुस्तक का मूल्य अत्यन्त अल्प रखा गया है ।

८ योगदर्शनम् । श्रीमद्वाचस्पतिमिश्रविरचित तत्त्[illegible] महर्षिकृष्णद्वैपायनप्रणीतभाष्यालङ्कृतम् । [illegible] दासीनविरचित विषमस्थलटिप्पणी स[illegible]

९ अर्थसंग्रहः । परीक्षोपयोगि संस्क[illegible]